यौगन्धरायणः—स स्वकं विस्मयादात्मानमाविष्करोति, उत सर्वारम्भसिद्धौ रमणीयं भवति । अथ मामन्तरेण स्वामी न किञ्चिदाह ।

१२ हंसकः—अय्य ! अत्थि, पदक्खिणीकरअन्तो भट्टारं अन्तजलावगाढाए दिट्ठीए बहुकं सदद्टुकामेण विअ म्हि भट्टिणा वुत्तो—गच्छ जोअन्ध—( इत्यर्धोक्ते तिष्ठति । ) [ आर्य ! अस्ति, प्रदक्षिणीकुर्वन्

१५ भर्तारमन्तर्जलावगाढया दृष्ट्या बहुकं सन्देष्टुकामेनेवास्मि भर्त्रोक्तः—गच्छ यौगन्ध— ]

यौगन्धरायणः—स्वैरमभिधीयतां, स्वामिवाक्यमेतत् ।

१८ हंसकः—जोअन्धराअणं पेक्खेहि त्ति । [ यौगन्धरायण प्रेक्षस्वेति। ]

यौगन्धरायणः—मा तावत् । सर्वसचिवमण्डलमतिक्रम्यैको यौगन्धरायणो द्रष्टव्य इत्याह ।

२१ हंसकः—अह इं । [ अथ किम् । ]

यौगन्धरायणः—तेन हि अनर्हप्रतिक्रियमनिर्विष्टभर्तृपिण्डमनुपकृतराजसत्कारं यदि खलु मां द्रष्टव्यं मन्यते स्वामी ।

२४ हंसकः—वाढं । [ बाढम् । ]

यौगन्धरायणः—पुरुषान्तरितं मां द्रक्ष्यति स्वामी,

रिपुनृपनगरे वा बन्धने वा वने वा
सगुपगतविनाशः प्रेत्य वा तुल्यनिष्ठम् ।
जितमिति कृतबुद्धि वञ्चयित्वा नृपं तं
पुनरधिगतराज्यः पार्श्वतः श्लाघनीयम् ॥ १४ ॥

( नेपथ्ये )

हा हा भट्टा ! [ हा हा भर्तः ! ]

३ यौगन्धरायणः—

---

१ स्वय.

एष शोकप्रतीकारो यथाशक्ति निवेद्यते ।
एतत् स्त्रीभिरसामर्थ्यं मन्त्रिणामनुवर्ण्यते ॥ १५ ॥

( प्रविश्य )

प्रतीहारी–अय्य ! भट्टिमादा । [ आर्य ! भर्तृमाता । ]

३ यौगन्धरायणः–किं किम् ।

प्रतीहारी–आह ।

यौगन्धरायणः– किमिति ।

६ प्रतीहारी–एवंविहस्स सुहिज्जणेण परिगहीदस्स वच्छराअस्स अअं वुत्तन्तो । किं सक्कं कत्तुं अन्तरेण विहाणं । ता सम्भाणिअ सुहिज्जणं समत्थिअदु । जो खु दाणि सङ्कटेसु वा ण विसीददि, विसमगदो
९ वा ण पच्चवचिट्ठदि, वञ्चिदो वा ण णिव्वेदं गच्छदि, पडिघादेसु वा पाणा ण समुज्झदि, सो खु बुद्धिमन्तो पुच्छिज्जइ पढमं एव्व मे वच्छस्स वअस्सो पच्छा अमच्चो आणेदु मे पुत्तअं पुत्तओ त्ति ।

१२ [ एवंविधस्य सुहृज्जनेन परिगृहीतस्य वत्सराजस्यायं वृत्तान्तः । किं शक्यं कर्तुमन्तरेण विधानम् । तत् सम्भाव्य सुहृज्जनं समर्थ्यताम् । यः खल्विदानीं सङ्कटेषु वा न विषीदति, विषमगतो वा न पर्यवतिष्ठते,
१५ वञ्चितो वा न निर्वेदं गच्छति, प्रतिघातेषु वा प्राणान् न समुज्झति, स खलु बुद्धिमान् पृच्छ्यते प्रथममेव मे वत्सस्य वयस्यः पश्चादमात्य आनयतु मे पुत्रकं पुत्रक इति । ]

१८ यौगन्धरायणः–अहो नु खल्वत्रभवत्या राजवंशाश्रितं धीरवाक्यमभिहितम् । अत्रभवत्याः सम्भावनां पूजयामि । विजये ! आपस्तावत् ।

प्रतीहारी–अय्य ! तह । ( निष्क्रम्य प्रविश्य ) इमा आवो । [ आर्य ।
२१ तथा । इमा आपः । ]

यौगन्धरायणः–आनय । ( आचम्य ) विजये ! किमाह तत्रभवती ।

प्रतीहारी–आणेदु मे पुत्तअं पुत्तओ त्ति । [ आनयतु मे पुत्रकं
२४ पुत्रक इति ]

यौगन्धरायणः—हंसक ! किमाह स्वामी ।
हंसकः—जोअन्धरायणं पेक्खेहि त्ति । [ यौगन्धरायण प्रेक्षस्वेति । ]
२७ यौगन्धरायणः—विजये !

येदि शत्रुबलग्रस्तो राहुणा चन्द्रमा इव ।
मोचयामि न राजानं नास्मि यौगन्धरायणः ॥ १६ ॥

प्रतीहारी—अय्य ! तह । ( निष्क्रान्ता । ) [ आर्य ! तथा । ]

( प्रविश्य )

३ निर्मुण्डकः—अय्य ! अच्छरिअं णिव्वुत्तं । भट्टिणो सन्तिणिमित्तं उवट्ठिअभोअणं बम्हणत्तणं पेक्खिअ केण वि किल उम्मत्तवेसधारिणा बम्हणेण हसिअ वुत्तं—सेरं सेरं अण्हन्तु भवन्तो,
६ अब्भुदअं खु इमस्स राअउलस्स भविस्सदि त्ति । तदो वअणसमआलं एव्व अदंसणं गदो । [ आर्य ! आश्चर्यं निर्वृत्तम् । भर्तुः शान्तिनिमित्तमुपस्थितभोजनं ब्राह्मणजनं प्रेक्ष्य केनापि किलोन्मत्तवेष-
९ धारिणा ब्राह्मणेनोक्तं हसित्वोक्त—स्वैरं स्वैरमश्नन्तु भवन्तः, अभ्युदयः खल्वस्य राजकुलस्य भविष्यतीति । ततो वचनसमकालमेवादर्शनं गतः । ]
यौगन्धरायणः—अपि सत्यम् ।
१२ ( ततः प्रविशति ब्राह्मणः । )
ब्राह्मणः—इमेऽत्रभवता परिगृहीता आत्मप्रयोजनोत्सृष्टाः परिच्छदविशेषाः । एभिः प्रच्छादितशरीरो भगवान् द्वैपायनः प्राप्तः ।
१५ यौगन्धरायणः—एवं, द्वैपायनः प्राप्तः ।
ब्राह्मणः—बाढम् ।
यौगन्धरायणः—तेन हि पश्यामस्तावत् ।
१८ ब्राह्मणः—पश्यतु भवान् ।

---

१ यदि शत्रुबलग्रस्त राहुणा चन्द्रमिव । which should be यदि शत्रुबलग्रस्तं तु चन्द्रमिव राहुणा ॥ २ उवहसिअ.

यौगन्धरायणः—कथमन्यद् रूपमिव मे संवृत्तम् । हन्त भोः ! गतोऽस्मि स्वामिसन्निकर्षमेव । इदानीं ममोपदेशार्थमिवोत्सृष्टः ।

उन्मत्तसदृशो वेषो धारितस्तेन साधुना ।
मोचयिष्यति राजानं मां च प्रच्छादयिष्यति ॥ १७ ॥

( प्रविश्य )

प्रतीहारी—अय्य ! भट्टिमादा आह—इच्छामि पुत्तअं पेक्खिदुं त्ति । [ आर्य ! भर्तृमाताह—इच्छामि मे पुत्रकं प्रेक्षितुमिति । ]

यौगन्धरायणः—अयमयमागच्छामि । आर्य ! शान्तिगृहे मां प्रतीक्षस्व ।

ब्राह्मणः—बाढम् । ( निष्क्रान्तः । )

यौगन्धरायणः—हंसक ! विश्रम्यतामिदानीम् ।

हंसकः—अय्य ! तह । ( निष्क्रान्तः । ) [ आर्य ! तथा । ]

यौगन्धरायणः—विजये ! गच्छाग्रतः ।

प्रतीहारी— अय्य ! तह । [ आर्य ! तथा । ]

यौगन्धरायणः—भोः !

काष्ठादग्निर्जायते मथ्यमानाद्
भूमिस्तोयं खन्यमाना ददाति ।
सोत्साहानां नास्त्यसाध्यं नराणां
मार्गारब्धाः सर्वयत्नाः फलन्ति ॥ १८ ॥

( निष्क्रान्ताः । )

प्रथमोऽङ्कः ।

## अथ द्वितीयोङ्कः ।

( ततः प्रविशति काञ्चुकीयः । )

३ काञ्चुकीयः—आभीरक ! आभीरक ! गच्छ महासेनवचनात् प्रतीहाररक्षकं ब्रूहि—एष काशिराजोपाध्याय आर्यजैवन्तिरद्य दौत्येन प्राप्तः । अस्य सामान्यदूतसत्कारं पृष्ठतः कृत्वा सुखमिव ६ निवेश्यताम् । यथा चातिथिसत्कारं जानीयात् तथा प्रयतितव्यम् इति । भोः ! एवं नामाहन्यहनि गोत्रानुकूलेभ्यो राजकुलेभ्यः कन्याप्रदानं प्रति दूतसम्प्रेषणा वर्तते । न खलु महासेनः ९ कञ्चिदपि प्रत्याचष्टे, न चाप्यनुगृह्णीते । किन्तु खल्विदम् । अथवा दैवमत्र कन्याप्रदानेऽधिकृतम् । कुतः,

व्यक्तं न तावत् समुपैति तस्य दूतो वधूत्वे विहिता हि यस्य ।
ततो नरेन्द्रेषु गुणान् नरेन्द्रो न वेत्ति जानन्नपि तत्प्रतीक्षः ॥१॥

अये संलीयमानान्तःपुरचरः सनाथीभवत्ययं देशः । अये अयं महासेनः य एषः,

दूर्वाङ्कुरस्तिमितनीलमणिप्ररोहैः
पीताङ्गदैः परिगतैः परिणीवितांसः ।
अस्माद् वनात् कनकतालवनैकदेशा-
न्निर्धावितैः शरवणादिव कार्त्तिकेयः ॥ २ ॥

( निष्क्रान्तः । )

विष्कम्भकः ।

३ ( ततः प्रविशति राजा सपरिवारः । )

राजा—

मम हयखुरभिन्नं मार्गरेणुं नरेन्द्रा
मुकुटतटविलग्नं भृत्यभूता वहन्ति ।

---

१ अन्यसामान्यदूत० . २ परिणीदितांसः,

न च मम परितोषो यन्न मां वत्सराजः
प्रणमति गुणशाली कुञ्जरज्ञानदृप्तः ॥ ३ ॥

बादरायण !

( प्रविश्य ) काञ्चुकीयः—जयतु महासेनः ।

३ राजा—निवेशितो जैवन्तिः ।

काञ्चुकीयः—निवेशितोऽनुरूपतश्च सत्कृतः ।

राजा—न्याय्यं कृतं राजवंश्यगुणाभिलाषिणा । समागतानां युक्तः

६ पूजया प्रतिग्रहः । अथ सर्वोऽपि कन्याप्रदानं प्रतिपृष्टश्चेत् परच्छन्देन तिष्ठति । ( काञ्चुकीयमवलोक्य ) बादरायण ! वक्तुकाममिव त्वां लक्षये ।

९ काञ्चुकीयः—न खलु किञ्चित् । कन्याप्रदानं प्रति समुत्पन्नोऽभिमर्शः।

राजा—अलमलं परिहृत्य । सर्वसाधारणो ह्येष विधिः । अभिधीयताम् ।

काञ्चुकीयः—महासेन ! एषा मे विवक्षा—एवं नामाहन्यहनि

१२ गोत्रानुकूलेभ्यो राजकुलेभ्यः कन्याप्रदानं प्रति दूतसम्प्रेषणा वर्तते । न च महासेनः कञ्चिदपि प्रत्याचष्टे, न चाप्यनुगृह्णीते । किन्तु खल्विदमिति ।

१५ राजा—बादरायण ! एवमेतत् । अतिलोभाद् वरगुणानामतिस्नेहाच्च वासवदत्तायां न शक्नोमि निश्चयं गन्तुम् ।

कुलं तावच्छ्लाघ्यं प्रथममभिकाङ्क्षे हि मनसा
ततः सानुक्रोशं मृदुरपि गुणो ह्येष बलवान् ।
ततो रूपे कान्ति न खलु गुणतः स्त्रीजनभयात्
ततो वीर्योदग्रं न हि न परिपाल्या युवतयः ॥ ४ ॥

काञ्चुकीयः—महासेनं वर्जयित्वा न हीदानीमेते गुणा क्वचिदेकत्रा दृश्यन्ते ।

---

१ समागतप्रीतिकारणागतानाम्. २ वक्तुकाम इव.

३ राजा—अतः खलु चिन्त्यते ।

कन्याया वरसम्पत्तिः पितुः ( प्रायः ) प्रयत्नतः ।
भाग्येषु शेषमायत्तं दृष्टपूर्वं न चान्यथा ॥ ५ ॥

दुहितुः प्रदानकाले दुःखशीला हि मातरः । तस्माद् देवी तावदाहूयताम् ।

३ काञ्चुकीयः—यदाज्ञापयति महासेनः । ( निष्क्रान्तः । )

राजा—भोः ! काशिराजदूतसम्प्रेषणेन वत्सराजग्रहणार्थं गतं शालङ्कायनं प्रति गता मे बुद्धिः । किन्तु खल्वद्यापि वृत्तान्तं न

६ प्रेषयति स ब्राह्मणः ।

कामं या तस्य सा लीला तत्रैवानुगतं मनः ।
ये त्वस्य सचिवाः सर्वे यत्नमास्थाय ते स्थिताः ॥ ६ ॥

( ततः प्रविशति देवी सपरिवारा । )

देवी—जेदु महासेणो । [ जयतु महासेनः । ]

३ राजा—आस्यताम् ।

देवी—जं महासेणो आणवेदि । ( उपविशति । ) [ यन्महासेन आज्ञापयति । ]

६ राजा—वासवदत्ता क्व ।

देवी—उत्तराए वेदालिआए सआसे वीणं सिक्खिदुं णारदीअं गआ आसी । [ उत्तराया वैतालिक्याः सकाशे वीणां शिक्षितुं

९ नारदीयां गतासीत् । ]

राजा—कथमुत्पन्नोऽस्या गान्धर्वेऽभिलाषः ।

देवी—केण वि किल उग्घादेण कञ्चणमालं वीणाजोग्गं करअन्तिं

१२ पेक्खिअ सिक्खिदुकामा आसी । [ केनापि किलोद्घातेन काञ्चनमालां वीणायोग्यां कुर्वतीं प्रेक्ष्य शिक्षितुकामासीत् । ]

राजा—सदृशं बाल्यस्य ।

१५ देवी–महासेणं वि किं वि विण्णविदुकामा म्हि । [ महासेनमपि किमपि विज्ञापयितुकामास्मि । ]
राजा–किमिति ।

१८ देवी–आअय्यं इच्छामि त्ति । [ आचार्यमिच्छामीति । ]
राजा–उपस्थितविवाहकालायाः किमिदानीमाचार्येण । पतिरेवैनां शिक्षयिष्यति ।

२१ देवी–हं एसो दाणि मे दारिआए कालो । [ हम् एष इदानीं मे दारिकायाः कालः । ]
राजा–भोः ! नित्यं प्रदीयतामित्यस्मानुपरुध्य किमिदानीं सन्तप्यसे ।

२४ देवी–अभिप्पेदं मे पदाणं । विओओ मं सन्तावेदि । अह कस्स उण दिण्णा । [ अभिप्रेतं मे प्रदानम् । वियोगो मां सन्तापयति । अथ कस्मै पुनर्दत्ता । ]

२७ राजा–न तावन्निश्चयो गम्यते ।
देवी–इदाणिं पि ण दाव । [ इदानीमपि न तावत् । ]
राजा–

> अदत्तेत्यागता लज्जा दत्तेति व्यथितं मनः ।
> धर्मस्नेहान्तरे न्यस्ता दुःखिताः खलु मातरः ॥ ७ ॥

सर्वथा श्वशुरपरिचरणसमर्थे वयसि वर्तते वासवदत्ता । एष चापरः काशिराजोपाध्याय आर्यजैवन्तिरद्य दौत्येन प्राप्तो विलोभयति मां

३ चारित्रेण । ( आत्मगतम् ) न किञ्चिदाह । अभूपूर्वा व्याकुला कथं निश्चयं गमिष्यति । भवतु, निवेदयाम्यस्यै । ( प्रकाशम् ) श्रूयन्तेऽस्मत्सम्बन्धप्रयोजनायागता राजानः ।

६ देवी–किं दाणि वित्थरेण । जहिं दइअ ण सन्तप्पामो, तहिं दीअदु । [ किमिदानीं विस्तरेण । यत्र दत्त्वा न सन्तप्यामहे, तत्र दीयताम् । ]
राजा–अहो महान् खलु स्त्रीत्वमिहितो दुःखविस्तर इदानीं पश्चादु-

९ पालम्भनं श्रोतुम् । तस्माद् देवी तावन्निश्रयं गच्छतु । श्रूयताम्,
अस्मत्सम्बद्धो मागधः काशिराजो वाङ्गः सौराष्ट्रो मैथिलः शूरसेनः ।
एते नानार्थैर्लोभयन्ते गुणैर्मां कस्ते वैतेषां पात्रतां याति राजा ॥८॥

( प्रविश्य )

काञ्चुकीयः—वत्सराजः ।

३ राजा—किं वत्सराजः ।
काञ्चुकीयः—प्रसीदतु प्रसीदतु महासेनः । प्रियवचननिवेदनत्वरया
क्रमविशेषो नावेक्षितः ।

६ राजा—प्रियवचनमिति ।
देवी—( उत्थाय ) जेदु महासेणो । [ जयतु महासेनः । ]
राजा—( सहर्षम् ) प्रियवचनपरिहार्या हि देवी । आस्यताम् ।

९ देवी—जं महासेणो आणवेदि । ( उपविशति । ) [ यद् महासेन
आज्ञापयति । ]
राजा—उत्तिष्ठोत्तिष्ठ, स्वैरमभिधीयताम् ।

१२ काञ्चुकीयः—( उत्थाय ) तत्रभवतामात्येन शालङ्कायनेन गृहीतो
वत्सराजः ।
राजा—( सहर्षम् ) किमाह भवान् ।

१५ काञ्चुकीयः—तत्रभवतामात्येन शालङ्कायनेन गृहीतो वत्सराजः ।
राजा—उदयनः ।
काञ्चुकीयः—अथ किम् ।

१८ राजा—शतानीकस्य पुत्रः ।
काञ्चुकीयः—दृढम् ।
राजा—सहस्रानीकस्य नप्ता ।

२१ काञ्चुकीयः—स एव ।
राजा—कौशाम्बीशः ।

काञ्चुकीयः—सुव्यक्तम् ।

२४ राजा—गान्धर्वंवित्तकः ।

काञ्चुकीयः—एवं ब्रुवन्ति ।

राजा—वत्सराजो ननु ।

२७ काञ्चुकीयः—अथ किं, वत्सराजः ।

राजा—अथ किमुपरतो यौगन्धरायणः ।

काञ्चुकीयः—न खलु कौशाम्ब्यां किल ।

३० राजा—यद्येवं, न गृहीतो वत्सराजः ।

काञ्चुकीयः—श्रद्धत्तां महासेनः ।

राजा—

न श्रद्दधाम्युदयनग्रहणं त्वयोक्तं
व्यावर्तनं करतलैरिव मन्दरस्य ।
यस्याहवेषु रिपवः कथयन्ति शौर्यं
यौगन्धरायणमतानि च नः स्तनन्ति ॥ ९ ॥

काञ्चुकीयः—प्रसीदतु महासेनः । वृद्धोऽस्मि ब्राह्मणः खल्वहम् । न महासेनसमीपेऽनृतमभिहितपूर्वम् ।

३ राजा—आ अस्त्येतत् । अथ कः प्रियदूतः शालङ्कायनेन प्रेषितः ।

काञ्चुकीयः—न पुरुषः । जघातिशययुक्तेन रथेन वत्सराजमग्रतः कृत्वा स्वयमेवामात्यः प्राप्तः ।

६ राजा—एवं प्राप्तः । हन्त भोः ! अद्य विमुक्तसन्नाहा सुखं विश्राम्यन्त्वक्षौहिणी । अद्यप्रभृति प्रच्छन्नकृतदूतसम्प्रेषणा अशङ्किताः स्वप्स्यन्ति राजानः । एष समासः—अचारित महासेनः ।

९ देवी—किं अमच्चेण आणीदो । [ किममात्येनानीतः । ]

राजा—अथ किम् ।

देवी—एदण्णिमित्तं कस्स वि ण दिस्सामो यासयदत्तं । [ एतन्निमित्तं

१२ कस्मा अपि न दास्यामो वासवदत्ताम् । ]

राजा—युद्धावजितशत्रुः खल्वेष मम । बादरायण ! शालङ्कायनः क ।
काञ्चुकीयः—आहितो भद्रद्वारे ।
१५ राजा—गच्छ । भरतरोहकं ब्रूहि—कुमारविधिविशिष्टेन सत्कारेण वत्सराजमग्रतः कृत्वा प्रवेश्यतामभमात्य इति ।
काञ्चुकीयः—यदाज्ञापयति महासेनः ।
१८ राजा—एहि तावत् ।
काञ्चुकीयः—अयमस्मि ।
राजा—वत्सराजदर्शने कश्चिन्नोत्सारयितव्यः ।

शत्रुं पश्यन्तु मे पौराः श्रुतपूर्वं स्वकर्मभिः ।
सिंहमन्तर्गतामर्षं यन्त्रार्थमिव संयतम् ॥ १० ॥

काञ्चुकीयः—यदाज्ञापयति महासेनः । ( निष्क्रान्तः । )
देवी—बहूणि अब्भुदआणि इमस्सिं राअउले अणुभूदाणि । ण खु
३ अहं ईदिसं पीदिजोग्गं महासेणस्स सुमरामि । [ बहवोऽभ्युदया अस्मिन् राजकुलेऽनुभूताः । न खल्वहमीदृशं प्रीतियोग्यं महासेनस्य स्मरामि । ]
राजा—अहमप्येतादृशं प्रीतिविशेषं न श्रुतपूर्वं स्मरामि, यथा गृहीतो
६ वत्सराज इति ।
देवी—वच्छराओ णं । [ वत्सराजो ननु । ]
राजा—अथ किम् ।
९ देवी—बहूणि सम्बन्धप्पओअणागदाणि राअउलाणि सुदाणि । एदिणा ण पेसिदपुरुवो पुरुसो । [ बहूनि सम्बन्धप्रयोजनागतानि राजकुलानि श्रुतानि । एतेन न प्रेषितपूर्वः पुरुषः । ]
१२ राजा—देवि ! महासेनशब्दमपि न गणयति, किं सम्बन्धमभिलषति ।
देवी—ण गणेदि । किं बालो अपण्डिदो वा । [ न गणयति । किं बालः अपण्डितो वा । ]

---

१ आस्थितो द्वारे.

१५ राजा–बालः, न त्वपण्डितः ।
देवी–किण्णु हु एणं उस्सेअदि । [ किन्नु खल्वेनमुत्सेकयति । ]
राजा–उत्सेकयत्येनं मकाशराजर्षिनामधेयो वेदाक्षरसमवायप्रविष्टो
१८ भारतो वंशः । दर्पयत्येनं दायायागतो गान्धर्वो वेदः । विभ्रमयत्येनं वयस्सहजं रूपम् । विस्रम्भयत्येनं कथमप्युत्पन्नोऽस्य पौरानुरागः ।
देवी–अभिलसणीआ वरगुणा । कस्स वामदाए दोसो संवुत्तो ।
२१ [ अभिलषणीया वरगुणाः । कस्य वामतया दोषः संवृत्तः । ]
राजा–देवि ! किमिदानीमस्थाने विस्मितासि । पश्य,

अग्निः कक्षः इवोत्सृष्टो दहत् कालन्येन मेदिनीम् ।
अस्य मे शासनं दीप्तं विषयान्तेऽवसीदति ॥ ११ ॥

( प्रविश्य )

काञ्चुकीयः– जयतु महासेनः । यथाज्ञाप्रयुक्तसत्कारं प्रविष्टः
३ शालङ्कायनः । स तु विज्ञापयति–इदं भरतकुलोपभुक्तं वत्सराजकुले द्रष्टव्यं घोषवती नाम वीणारत्नम् । महासेनः प्रतिग्राहयितव्य इति । ( वीणां दर्शयति । )
६ राजा–प्रतिगृहीतं जयमङ्गलम् । ( वीणां गृहीत्वा ) इयं सा घोषवती नाम । यैषा,

श्रुतिसुखमधुरा स्वभावरक्ता करजमुखोल्लिखिताग्रधृष्टतन्त्री ।
ऋषिवचनगतेव मन्त्रविद्या गजहृदयानि बलाद्वशीकरोति ॥१२॥

भोः ! समरावजितानां रत्नानामिष्टसम्भोगः प्रीतिमुत्पादयति ।

अर्थशास्त्रगुणग्राही ज्येष्ठो गोपालकः सुतः ।
गान्धर्वद्वेषी व्यायामशाली चाप्यनुपालकः ॥ १३ ॥

क नु खल्वियं युज्यस्वा भवेत् । देवि ! वासवदत्ता वीणामुपक्रान्ता ननु ।

---

१ प्रतिष्ठितः, देवान्वयसमवायप्रविष्टो.

३ देवी–आम।

राजा–तेन हि इयमस्यै प्रदीयताम्।

देवी–वीणाप्पदाणेण भूओ वि उम्मत्ता विअ चिट्ठदि। [वीणा-

६ प्रदानेन भूयोऽप्युन्मत्तेव तिष्ठति।]

राजा–क्रीडतु क्रीडतु। नैतत् सुलभं श्वशुरकुले। बादरायण! क्व सा।

काञ्चुकीयः–अमात्येन सहोपविष्टा।

९ राजा–अथ वत्सेष्वधिकृतः।

काञ्चुकीयः–अहितविनयत्वात् पादयोरङ्गे तस्य बहुप्रहारत्वाच्च एकच्छयाहेन शयनीयेन मध्यमगृहे प्रवेशितः।

१२ राजा–हा धिग्, बहुप्रहारः। एष इदानीं निरुपस्कृतस्य तेजसो दोषः। नृशंसः खल्वस्मिन् काल उपेक्षितवान्। बादरायण! गच्छ। भरतरोहकं ब्रूहि–क्रियतामस्य व्रणप्रतिकर्मेति।

१५ काञ्चुकीयः–यदाज्ञापयति महासेनः।

राजा–अथवा एहि तावत्।

काञ्चुकीयः–अयमस्मि।

१८ राजा–अस्य सर्वदर्शनमविमुक्तसत्कारमवगन्तव्यम्। आकारसूचिता अस्य प्रीतयो विज्ञेयाः। अतिक्रान्तविमहाश्रिताः कथा न कथयितव्याः। श्रुताद्विप्रयोगेण्णाशिपोऽभिधेयाः। कालसंवादिना स्तवेनार्च्यः।

२१ काञ्चुकीयः–यदाज्ञापयति महासेनः। (निष्क्रम्य प्रविश्य) जयतु महासेनः। पश्येव कृतव्रणप्रतिकर्मा वत्सराजः। अकालस्नायिदिदानीं द्वितीयस्य प्रतिकर्मण इति। मध्याह्नमारोहति दिवाकरः।

२४ राजा–अथ कस्मिन् प्रदेशे वीरमानी।

काञ्चुकीयः–मयूरयष्टिपुरे।

राजा–हा धिग्, अनाश्रयणीयः खल्वयं देशः। आतपप्रति-

२७ कूल्यार्थं मणिभूमिकायां प्रवेशयेत्याज्ञापय।

काञ्चुकीयः–यदाज्ञापयति महासेनः । ( निष्क्रम्य प्रविश्य ) यदाज्ञप्तं महासेनेन, सर्वमनुष्ठितम् । अमात्यस्तु भरतरोहको महासेनं
३० द्रष्टुमिच्छति ।

राजा–व्यक्तं न रोचते तस्मै वत्सराजसत्क्रिया । अस्यैष नीतेः
: · परिश्रमः । अहमेवैनमनुनयामि ।

३१ देवी–किं सम्बन्धो णिच्चिदो । [ किं सम्बन्धो निश्चितः । ]

राजा–न तावन्निश्चयो गम्यते ।

देवी–अलं दाणि तुवरिअ । बाला मे दारिआ । [ अलमिदानीं
३४ त्वरित्वा । बाला मे दारिका । ]

राजा–यदभिरुचितं भवत्यै । प्रविशत्वभ्यन्तरम् ।

देवी–जं महासेणो आणवेदि । ( निष्क्रान्ता सपरिवारा । )
३९ [ यन्महासेन आज्ञापयति । ]

राजा– ( विचिन्त्य )

पूर्वं तावद् वैरमस्यावलेपादानीतेस्मिन् स्यात् तु मध्यस्थता मे
युद्धादिष्टं संशयस्थं विपन्नं श्रुत्वा स्वेनं संशयं चिन्तयामि ॥ १४ ॥

( निष्क्रान्तौ । )

द्वितीयोऽङ्कः ।

---

अथ तृतीयोऽङ्कः ।

( ततः प्रविशति डिण्डिकवेषो विदूषकः । )

३ विदूषकः–( निरूप्य ) भो । देवउलपीठिआए मम मोदअमल्लअं णिक्खिविअ दक्खिणामासआणि गणिअ वन्दिअ पडिणिवुत्तो दाणि मोदअमल्लअं ण पेक्खामि । ( विचिन्त्य ) आ एक्कमोद-
६ अपरितोसिदो ण दाव ओव्वग्गो मं अणुसरदि । रच्छाए पाआरस्स अगई कुक्कुराणं । अस्सदभत्तदाए अत्थोद्दणीअं पडिआणं । आदु

अपि ण खाआमि । भोदु ओग्गारइस्स दाव अह । ही ही चुट्ट्हो
९ विअ सूअरवत्थी सुद्धवाद एव्व उग्गिरामि । अहव लोहिदकचा-
अणीए केरअ मम केरअ त्ति करिअ सिवेण पडिहत्थीकिद भवे ।
( निरूप्य ) जदि वि एसो बम्हआरी बहुकेहि रूवेहि अविणअ
१२ करेदि । भोदु पेक्खिस्स दाव अह । भो । एद खु मम मोदअम-
ल्लअ सिवस्स पादमूले चिट्ठइ । जाव ण गह्णामि । देहि भट्टा ।
देहि मे मोदअमल्लअ । भट्टा । तुव वि मम चोरो सि । अनिहा
१५ अलिहिद एवमम मोदअमल्लअ सदावतिमिरेण सुट्ठु ण पेक्खामि ।
भोदु पमज्जिस्स दाव अह । ही ही साहु ले चित्तअर । भाव ।
साहु । जुत्तलेहदाए वण्णाण जह जह पमज्जामि, तह तह उज्जल्ल
१८ दर होइ । भोदु, उदएण पमज्जिस्स । कहिं णु हु उदअ । इव सोहण
सुद्धतडाअ । अह विअ सिवो वि दाव पदसिस मोदअमल्लए
णिरासो होदु । [ भो । देवकुल्पीठिकाया मम मोदकमल्लकं निक्षिप्य
२१ दक्षिणामापवान् गणयित्वा गत्वा प्रतिनिवृत्त इदानीं मोदकमल्लकं न
प्रेक्षे । वा एकमोदकपरितोषितो न ब्राह्मणो मामनुसरति । वधतया
प्राकारस्यागति कुक्कुराणाम् । अक्षतभक्तयालोभनीय पथिकानाम् ।
२४ अथवा अन्येन खादामि । भवतु उद्गरिष्यामि तावदहम् ही ही वृद्ध
इव सूकरवस्ति शुद्धवातमेवोद्गिरामि । अथवा लोहितकात्यायन्या
सम्बन्धि मम सम्बन्धीति कृत्वा शिवेन प्रतिहस्तीकृत भवेत् । यद्यप्येप
२७ ब्रह्मचारी बहुकै रूपैरविनय करोति । भवतु प्रेक्षिष्ये तावदहम् । भो ।
एत खलु मम मोदकमल्लक शिवस्य पादमूले तिष्ठति । यावद् एन
गृह्णामि । देहि भर्तः । देहि मे मोदकमल्लकम् । भर्तः । त्वमपि मम
३० चोरोऽसि । अविधा आलिखित खलु मम मोदकमल्लक सन्तापतिमिरेण
सुष्ठु न प्रेक्षे । भवतु प्रमार्जिष्यामि तावदहम् । ही ही साधु रे चित्रकर ।
भाव । साधु । युक्तलेखतया वर्णाना यथा यथा प्रमार्ज्मि, तथा तथो-

३३ उज्ज्वलतरं भवति। भवतु, उदकेन प्रमार्जिष्यामि। कुत्र नु खलूदकम्।
इदं शोभनं शुद्धतटाकम्। अहमिव द्विजोऽपि तावद् एतस्मिन् मोदक-
मल्लके निराशो भवतु। ]

३६ ( नेपथ्ये )

मोदआ! मोदआ! हहह। [ मोदकाः! मोदकाः! हहह। ]

विदूषकः–अविहा एसो उम्मत्तओ मम मोदअमल्लअं गहणिअ
३९ हसमाणो फेणायमाणमलिणवरिसारच्छोदअं विअ इदो एव्वा-
हावइ। चिट्ठ चिट्ठ उम्मत्तअ! चिट्ठ। इमिणा दण्डअट्ठेण सीसं दे
भिन्दामि। [ अविधा एष उन्मत्तको मम मोदकमल्लकं गृहीत्वा हसमानः
४२ फेनायमानमलिनवर्षारथ्योदकमिवेत एवाधावति। तिष्ठ तिष्ठोन्मत्तक! तिष्ठ।
अनेन दण्डकाष्ठेन शीर्षं ते भिनद्मि। ]

( ततः प्रविशत्युन्मत्तकः। )

४५ उन्मत्तकः–मोदआ! मोदआ! हहह। [ मोदकाः! मोदकाः! हहह! ]

विदूषकः–भो उम्मत्तअ! आणेहि मम मोदअमल्लअं। [ भो
उन्मत्तक! आनय मम मोदकमल्लकम्। ]

४८ उन्मत्तकः–किं मोदआ। कहिं मोदआ। कस्स मोदआ। किं इमे
मोदआ उज्झन्ति, आदु पिणज्झन्ति, उदाहो खज्जन्ति। [ किं
मोदकाः। कुत्र मोदकाः। कस्य मोदकाः। किमिमे मोदका उज्झ्यन्ते,
५१ अथवा पिनह्यन्ते उताहो खाद्यन्ते। ]

विदूषकः–ण खज्जन्ति ण खज्जन्ति ण उज्झन्ति अ। [ न खाद्यन्ते
न खाद्यन्ते नोज्झ्यन्ते च। ]

५४ उन्मत्तकः–एसा खु मम रसणा खाइदुकामा छिद्दाणि करेदि। [ एषा
खलु मम रसना खादितुकामा छिद्राणि करोति। ]

विदूषकः–भो उम्मत्तअ। आणेहि मम मोदअमल्लअं। मा परकेरए
५७ सिणेहं करिअ ओवज्झेहि। [ भो उन्मत्तक! आनय मम मोदक-
मल्लकम्। मा परकीये स्नेहं कृत्वा अवबध्यस्व। ]

उन्मत्तक –के के म वज्झन्ति । मोदआ खु मं रक्खन्ति ।
णेवच्छविसेसमण्डिदा पीर्दि उवदेदु उवट्ठिआ ।
राअगिहे दिण्णमुल्लिआ कालवसेण मुहुत्तदुल्लआ ॥ १ ॥
[ के के मा बध्नन्ति । मोदकाः खलु मा रक्षन्ति ।
नेपथ्यविशेषमण्डिता प्रीतिमुपदातुमुपस्थिता ।
राजगृहे दत्तमूल्या कालवशेन मुहूर्तदुर्लभा ॥ ]

विदूषक –भो उम्मत्तअ । आणेहि मम मोदअमल्लअं । इमिणा । पच्चएण उवज्झाअउलं गन्तव्वं । [ भो उन्मत्तक ! आनय मम
३ मोदकमल्लकम् । अनेन प्रत्ययेनोपाध्यायकुलं गन्तव्यम् । ]

उन्मत्तक –मए वि इमिणा पच्चएण जोअणसदं गन्तव्वं । [ मयाप्यनेन प्रत्ययेन योजनशतं गन्तव्यम् । ]

६ विदूषक –किं एरावणो तुम । [ किमैरावणस्त्वम् । ]

उन्मत्तक –आम एरावणो अहं । ण हु दाव देवराजो मं आसणं आलुहदि । सुदं च मया पादपासिएहिं इन्दे वज्झ त्ति । धाराणि
९ अलेहिं विज्जुम्मईहिं कसाहिं तालिअ वाउब्भामेण परिब्भमन्तेण भिज्जीअदि मेहचन्धणं । [ आम ऐरावणोऽहम् । न खलु तावद् देवराजो मामासनमारोहति । श्रुतं च मया पादपाशिकैरिन्द्रो बद्ध
१२ इति । धारानिगलै विद्युन्मयीभिः कशाभिस्ताडयित्वा वातोद्भ्रामेण परिभ्रमता भिद्यते मेघबन्धनम् । ]

विदूषक –भो उम्मत्तअ । ण तुवं मम दइस्ससि, विलविस्सं दाव
१५ अहं । [ भो उन्मत्तक ! न त्वं मम दास्यसि, विलपिष्यामि तावदहम् । ]

उन्मत्तक –विलव विलव विक्कोस वा विलव । [ विलप विलप विक्रोश वा विलप । ]

१८ विदूषक –अब्बम्मण्णं भो । अब्बम्मण्णं । [ अब्रह्मण्यं भो ! अब्रह्मण्यम् । ]

उन्मत्तकः—अहं पि विलविस्सं। इन्दे वद्धे भो। इन्दे वद्धे भो!!
२१ [ अहमपि विलपिष्यामि। इन्द्रो बद्धो भोः! इन्द्रो बद्धो भोः!!]
विदूषकः—अव्वम्मण्णं भो! अव्वम्मण्णं। [ अब्रह्मण्यं भोः! अब्रह्मण्यम्। ]

२४ ( नेपथ्ये )

मा भाआहि मा भाआहि वम्हणाउस। मा भाआहि। [ मा बिभीहि मा बिभीहि ब्राह्मणोपासक! मा बिभीहि। ]

२७ विदूषकः—( सहर्षम् ) आअदे चन्दे समाअदाणि सव्वणक्खत्ताणि। अअं वम्हणभावं। ईहामत्तएण समणएण अभअं दीअदि। [ आगते चन्द्रे समागतानि सर्वनक्षत्राणि। अयं ब्राह्मणभावः। ईहा-
३० मात्रकेण श्रमणकेनाभयं दीयते। ]

( ततः प्रविशति श्रमणकः। )

श्रमणकः—मा भाआहि मा भाआहि वम्हणाउस! मा भाआहि।
३३ के के इह, किं कय्यं, विलवन्दि। [ मा बिभीहि मा बिभीहि ब्राह्मणोपासक! मा बिभीहि। के के इह, किं कार्यं, विलपन्ति। ]
विदूषकः—अविहा पडिहारक्खअवुत्ति खु समणओ अणुहोदि।
३६ भो समणअ! भअवं! एसो उम्मत्तओ मम मोदअमल्लअं गहणिअ ण देदि [ अविधा प्रतिहाररक्षकवृत्तिं खलु श्रमणकोऽनुभवति। भोः श्रमणक! भगवन्! एष उन्मत्तको मम मोदकमल्लकं
३९ गृहीत्वा न ददाति। ]
श्रमणकः—मोदअं पेक्खामि दाव। [ मोदकं प्रेक्षे तावत्। ]
उन्मत्तकः—पेक्खदु पेक्खदु समणअ! भवं। [ प्रेक्षतां प्रेक्षतां
४२ श्रमणक! भवान्। ]
श्रमणकः—शु शु। [ शु शु। ]
विदूषकः—हद्धि उम्मत्तअस्स हत्थे ईहामत्तएण समणएण थुथूकिदा
४५ अधण्णस्स मम मोदआ दिट्ठपुरुवा एव्व संवुत्ता। [ हा धिग्

उन्मत्तकस्य हस्ते ईहामात्रकेण श्रमणकेन शुयुक्ता अधन्यस्य मम मोदका दृष्टपूर्वा एव संवृत्ताः । ]

४८ श्रमणकः–भो उम्मत्तआउस ! णीआदेहि णीआदेहि एदाणि मोदआणि कत्थूळिआफेणपण्डराणि बहुपिट्ठसमिद्धकोमळाणि णिट्ठाणिआ सुरा विअ महुराणि । मा दे खाइदाणि खज्जं
५१ उप्पादन्ति । [ भो उन्मत्तकोपासक ! निर्यातय निर्यातय एतानि मोदकानि कस्तूलिकाफेनपाण्डराणि बहुपिष्टसमृद्धकोमलानि निष्ठानिताः सुरा इव मधुराणि । मा ते खादितानि खर्जमुत्पादयन्तु । ]

५४ विदूषकः–अविहा मोदआणि त्ति करिअ कण्डिल्लल्लड्डुआ मे पडिच्छिदा । [ अविधा मोदका इति कृत्वा कण्डिल्लड्डुका मे प्रतीष्टाः । ]

श्रमणकः–उम्मत्तआउस ! णीआदेहि णीआदेहि । जदि ण
५७ णीआदेसि, तुवं सवेमि । [ उन्मत्तकोपासक ! निर्यातय निर्यातय । यदि न निर्यातयसि, त्वां शपामि । ]

उन्मत्तकः–पशीददु पशीददु शमणअ ! भअवं ! मा खु मा खु मं
६० शविदुं गह्ण गह्ण । [ प्रसीदतु प्रसीदतु श्रमणक ! भगवन् ! मारभतु मारभतु मा शप्तुम् । गृहाण गृहाण । ]

श्रमणकः–बम्हणाउस ! पेक्ख पेक्ख मम प्पभावं । [ ब्राह्मणो-
६३ पासक ! प्रेक्षस्व प्रेक्षस्व मम प्रभावम् । ]

विदूषकः–एसो उम्मत्तओ एदेण ईहामत्तएण समणएण उज्झिदं सावं पेक्खिअ मोदअमल्लअं भीदभीदं अगगङ्गुळिआए पसारि-
६६ दाए ठाविअ चिट्ठइ । भो उम्मत्तअ ! आणेहि मम मोदअमल्लअं । [ एष उन्मत्तक एतेनेहामात्रकेण श्रमणकेन उज्झितं शापं प्रेक्ष्य मोदकमल्लकं भीतभीतमग्राङ्गुल्यां प्रसारितायां स्थापयित्वा तिष्ठति । भो
६९ उन्मत्तक ! आनय मम मोदकमल्लकम् । ]

श्रमणकः—एदु एदु भवं । एदेहिं मोदएहिं मं सोत्थि वाअइस्ससि ।
[ एतु एतु भवान् । एतैर्मोदकैर्मां स्वस्ति वाचयिष्यसि । ]

७२ विदूषकः—ही ही ममकेरएहिं सोत्थि वाएमि । मए वि कोडुम्बिअस्स हत्थादो पडिग्गहगहीदाणि । ताणि भवदो वि उवाअणं भविस्सदि । सो वि समिद्धो होदु । एसो उम्मत्तओ अग्गिगिहं अहिमुहो
७५ गच्छइ । ट्ठिदो मज्झण्हो । पुव्वण्हे वि दाव अअं देसो सुण्णो भविस्सदि । जाव अहं वि इमाणि दक्खिणामासआणि मग्गगेहे णिक्खिविअ गच्छामि । एक्कस्स शाडिआए कय्यं अवरस्स मुल्लेण ।
७८ [ ही ही मदीयैः स्वस्ति वाचयामि । मयापि कौटुम्बिकस्य हस्तात् प्रतिग्रहगृहीतानि । तानि भवतोऽप्युपायनं भविष्यति । सोऽपि समृद्धो भवतु । एष उन्मत्तकोऽग्निगृहमभिमुखो गच्छति । स्थितो मध्याह्नः ।
८१ पूर्वाह्णेऽपि तावदयं देशः शून्यो भविष्यति । यावदहमपीमान् दक्षिणामाषकान् मार्गगेहे निक्षिप्य गच्छामि । एकस्य शाटिकया कार्यमपरस्य मूल्येन । ]

८४ ( सर्वे अग्निगृहं प्रविशन्ति । )

यौगन्धरायणः—वसन्तक ! शून्यमिदमग्निगृहम् ।
विदूषकः—आम भो ! सुण्णं खु इदं । [ आम भोः ! शून्यं खल्विदम् । ]

८७ यौगन्धरायणः—तेन हि परिष्वजेतां भवन्तौ ।
उभौ—बाढम् । ( परिष्वजेते )
यौगन्धरायणः—भवतु भवतु । तुल्यपरिश्रमौ भवन्तौ । आस्तां
९० भवान् भवानप्यास्ताम् ।
उभौ—बाढम् ।

( सर्वे उपविष्टाः । )

९३ यौगन्धरायणः—वसन्तक ! अपि दृष्टस्त्वया स्वामी ।
विदूषकः—आम भो ! दिट्ठो तत्तभवं । [ आम भोः ! दृष्टस्तत्रभवान् । ]

यौगन्धरायणः–हन्त भोः अतिक्रान्तयोगक्षेमा रात्रिः । दिवस इदानीं प्रतिपाल्यते ।

अह्नः समुत्तीर्य निशा प्रतीक्ष्यते शुभे प्रभाते दिवसोऽनुचिन्त्यते ।
अनागतार्थान्यशुभानि पश्यतां गतं गतं कालमवेक्ष्य निर्वृतिः ॥२॥

रुमण्वान्–सम्यग् भवानाह । तुल्येऽपि कालविशेषे निशैव बहुदोषा यत्नेषु । कुतः,

व्यवहारेष्वसाध्यानां लोके वा प्रतिरुध्यताम् ।
प्रभाते दृष्टदोषाणां वैरिणां रजनी भयम् ॥ ३ ॥

यौगन्धरायणः–वसन्तक ! स्वामिना सह कथितं ननु ।

विदूषकः–आम भो ! चिरं एव्व अ म्हि तत्तहोदा ओवज्झो । अज्ज
३ चउद्दसीं ण्हाअमाणो पडिवाल्दिो अ । [ आम भोः ! चिरमेव चास्मि तत्रभवतावबद्धः । अद्य चतुर्दशीं स्नायमानः प्रतिपालितश्च । ]

यौगन्धरायणः–स्नातः स्वामी ।

६ विदूषकः– ण्हादो अत्तभवं । [ स्नातोऽत्रभवान् । ]

यौगन्धरायणः–कृतं देवकार्यम् ।

विदूषकः– आ भो । पणाममत्तेण पूइदा देवदा । [ आम भोः !
९ प्रणाममात्रेण पूजिता देवताः । ]

यौगन्धरायणः–एतामपि बहुमतामवस्थां प्राप्तः स्वामी । कुतः,

स्नातस्य यस्य समुपस्थितदैवतस्य
पुण्याहघोषविरमे पटहा नदन्ति ।
तस्यैव कालविभवात् तिथिपूजनेषु
दैवप्रणामचलिता निगलाः स्वनन्ति ॥ ४ ॥

रुमण्वान्–भवत इदानीं प्रयत्न उचितं विधिसत्कारमानेष्यति स्वामिनः ।

३ यौगन्धरायणः-वसन्तक ! गच्छ भूयः स्वामिनं पश्य । विज्ञाप्यतां
च स्वामी—या सा प्रयाणं प्रतीह प्रस्तुता कथा, तस्याः श्वः
प्रयोगकाल इति । कुतः, स्नानावगाह्यवसशय्याभागेष्वाश्रयेषूप-
६ न्यस्तौषधिव्याजो नलागिरिर्मन्त्रौषधिनियमसंभृतः पुराणकर्म-
व्यामोहितः । अनुकूलमारुतमोक्तव्यः सज्जितो धूपः । रोषप्रति-
कूलोऽस्य सज्जितः प्रतिगजमदः । शालासन्निकृष्टमल्पसाधनं
९ गृहमादीपयितुमभिज्ञासिस्वाद् वारणानाम्। गजपतिचित्तोद्भ्रमणार्थं
देवकुलेषु स्थापिताः शङ्खदुन्दुभयः । तेन नादेन सर्वसाधनपरि-
गतशरीरेणावश्यं श्वः प्रद्योतेन स्वामी शरणमुपगन्तव्यः । ततः
१२ स्वामिना शत्रोरनुमतेनैव बन्धनान्निष्क्रम्य सहव्यापन्नां घोषवतीं
हस्तगतां कृत्वा नलागिरिः स्वाधीनः कर्तव्यः । ततो व्यवस्थिता-
सनस्तदानीं स्वामी नलागिरौ,

सेनाभिर्मनसानुबद्धजघनं कृत्वा जवे वारणं
सिंहानामसमाप्त एव विरुते त्यक्त्वा सविन्ध्यं वनम् ।
एकाह्ने व्यसने घने स्वनगरे गत्वा त्रिवर्णां दशां
येनैव द्विरदच्छलेन नियतस्तेनैव निर्याह्यते ॥ ५ ॥

इति ।

रुमण्वान्-वसन्तक ! किमिदानीं चिन्त्यते ।

३ विदूषकः-एव्वं चिन्तेमि महन्तो क्खु भवदो पयत्तो विवज्जिस्सदि
त्ति । [ एवं चिन्तयामि महान् खलु भवतः प्रयत्नो विपत्स्यत इति । ]

उभौ-न खलु वयं विज्ञातारः ।

६ विदूषकः-अहं पुढमं पच्छा भवन्तो । [ अहं प्रथमं पश्चाद् भवन्तौ । ]

यौगन्धरायणः-अथ किंकृता कार्यविपत्तिः ।

विदूषकः-वच्छराअस्स अण्णकज्जदाए । [ वत्सराजस्यान्यकार्यतया । ]

---

१ पुराणकर्माणि. २ अवकज्जदाए.

९ यौगन्धरायणः–कथमिव ।
विदूषकः–सुणह भवन्तो । [ शृणुतां भवन्तौ ]
उभौ–अवहितौ स्वः ।

१२ विदूषकः–जा सा काळट्ठमी अदिक्कन्दा, तर्हि तत्तहोदी वासवदत्ता णाम राअदारिआ धत्तीदुदीआ कण्णआदंसणं णिद्दोसं त्ति करिअ अवणीदकञ्चुआए सिविआए ओघट्टिदपणाळीपरसुदसळिळ-
१५ विसमं राअमग्गं परिहरिअ जं तं बन्धणदुवारस्स अग्गदो भअवदीए जक्खिणीए[1] ट्ठाणं, तस्सिं देवकय्यं कत्तुं गआ आसी । [ या सा कालाष्टमी अतिक्रान्ता, तस्यां तत्रभवती वासवदत्ता नाम राजदारिका
१८ धात्रीद्वितीया कन्यकादर्शनं निर्दोषमिति कृत्वापनीतकञ्चुकायां शिविकायामवघट्टितप्रणालीप्रसृतसलिलविषमं राजमार्गं परिहृत्य यच्चद् बन्धनद्वारस्याग्रतो भगवत्या यक्षिण्याः स्थानं, तस्मिन् देवकार्यं कर्तुं गतासीत् । ]

२१ यौगन्धरायणः–ततस्ततः ।
विदूषकः–तदो तत्तभवं तं दिअसं अब्भन्तरबन्धणपरिरक्खअं सिवअं णाम राअदासं अणुमाणिअ बन्धणदुवारे णिक्कन्तो ।
२४ [ ततस्तत्रभवान् तं दिवसमभ्यन्तरबन्धनपरिरक्षकं शिवकं नाम राजदासमनुमान्य बन्धनद्वारे निष्क्रान्तः । ]
उभौ–ततस्ततः ।

२७ विदूषकः–तदो पुरुसक्खन्धपरिवट्टणट्ठिदाए सिविआए पकामं दिट्ठा सा राअदारिआ । [ ततः पुरुषस्कन्धपरिवर्तनस्थितायां शिविकायां प्रकामं दृष्टा सा राजदारिका । ]

३० यौगन्धरायणः–ततस्ततः ।
विदूषकः–किं तदो तदो त्ति । बन्धणं दाणिं पमदवणं सम्भाविअ पउत्तो राअळीळं कत्तुं । [ किं ततस्तत इति । बन्धनमिदानीं प्रमदवनं
३३ संभाव्य प्रवृत्तो राजलीलां कर्तुम् । ]

१ भअवदीए अवन्तिसुन्दरीए.

यौगन्धरायणः—न खलु तां प्रति समुत्पन्नाभिलाषः स्वामी ।

विदूषकः—भो ! सङ्घआरिणो अणत्थ त्ति ईदिसं एव्व । [ भोः !
३६ सङ्घचारिणोऽनर्था इतीदृशमेव । ]

यौगन्धरायणः—सखे ! रुमण्वन् ! स्थिरीक्रियतामात्मा । अनेनैव वेषेण त्वरा गन्तव्या ।

३९ विदूषकः—भो ! अहं च एदेण उत्तो—भणेहि जोअन्धराअणस्स जहसमत्थिदा समत्थणा ण रोअदे मे । समाणे गमणे पज्जोदस्स अवमाणविसेसो चिन्तीअदि । मा कामप्पधाण त्ति मं अवमण्णेहि ।
४२ अवमाणस्स अवजिदिं अण्णेसामि त्ति । [ भोः ! अहं चैतेनोक्तः—भण यौगन्धरायणाय यथासमर्थिता समर्थना न रोचते मे । समाने गमने प्रद्योतस्यावमानविशेषश्चिन्त्यते । मा कामप्रधान इति मामवम-
४५ न्यस्व । अवमानस्यापचितिमन्विष्यामीति । ]

यौगन्धरायणः—अहो शत्रुजनापहास्यमभिधानम् । अहो निरपत्रपता खलु बुद्धेः । अहो सुहृज्जनसन्तापकारणम् । अदेशकाले ललितं
४८ कामयते स्वामी । कुतः,

शक्ता दर्पयितुं स्वहस्तरचिता भूमिः कटप्रच्छदा
पर्याप्तौ निगलस्वनश्चरणयोः कन्दर्पमालम्बितुम् ।
कः श्रुत्वा न भवेद्धि मन्मथपटुः प्रत्यक्षतो बन्धने
रक्षार्थं परिगण्यमानपुरुषे राजेति शब्दापनम् ॥ ६ ॥

विदूषकः—भो ! दंसिदो सिणेहो । णिव्विट्ठं पुरुसआरं । साहु उज्झिअ णं गच्छामो । [ भोः ! दर्शितः स्नेहः । निर्विष्टः पुरुषकारः ।
३ साधूज्झित्वैनं गच्छामः । ]

यौगन्धरायणः—वसन्तको भवान् ननु । वसन्तक ! मा मैवम् ।

परित्यजाम सन्तप्तं दुःखेन मदनेन च ।
सुहृज्जनमुपाश्रित्य यः कालं नावबुध्यते ॥ ७ ॥

विदूषकः—एव्वं एव्व जरं गमिस्सामो । [ एवमेव जरां गमिष्यामः । ]

यौगन्धरायणः—तन्नु श्लाघ्यम् ।

३ विदूषकः—सिलाघणीओ भवे, जदि लोओ जाणादि । [ श्लाघनीयो भवेद्, यदि लोको जानाति । ]

यौगन्धरायणः—न नः कार्यं लोकेन, स्वामिप्रियार्थोऽयमारम्भः ।

६ विदूषकः—सो वि दाव ण जाणादि । [ सोऽपि तावन्न जानाति । ]

यौगन्धरायणः—काले ज्ञास्यति ।

विदूषकः—कदमो दाणि सो कालो । [ कतम इदानीं स कालः । ]

९ यौगन्धरायणः—यदेयमारम्भसिद्धिः ।

विदूषकः—तदो तादिसो भवं मन्तणादो राआणं अन्तेउरादो राअदारिअं उभे णिय्यादेदु । [ ततस्तादृशो भवान् मन्त्रणाद्राजानमन्तः-

१२ पुराद्राजदारिकामुभे निर्यातयतु । ]

रुमण्वान्—इह भवता द्रष्टव्यम् ।

यौगन्धरायणः—उभयमिति । बाढम् । इयं द्वितीया प्रतिज्ञा—

> सुभद्रामिव गाण्डीवी नागः पद्मलतामिव ।
> यदि तां न हरेद् राजा नास्मि यौगन्धरायणः ॥ ८ ॥

अपि च,

> यदि तां चैव तं चैव तां चैवायतलोचनाम् ।
> नाहरामि नृपं चैव नास्मि यौगन्धरायणः ॥ ९ ॥

( कर्णं दत्त्वा ) अये शब्द इव । ज्ञायतां शब्दः ।

विदूषकः—भो ! तह । ( निष्क्रम्य प्रविश्य ) भो ! पडिउत्तदिवस-

३ विस्सम्भेण अविरलं सञ्चरन्तो जणो दीसइ । किं दाणिं करम्ह । [ भोस्तथा । भोः ! परिवृत्तदिवसविस्रम्भेणाविरलं सञ्चरन् जनो दृश्यते । किमिदानीं कुर्मः । ]

६ रुमण्वान्—तेन हि चतुर्द्वारमग्निगृहं, भिद्यतां न सङ्घातः ।

यौगन्धरायणः–न न । अमित्रो नः सङ्घातः । भिद्यतामरिसङ्घातः । स्वकार्यमनुष्ठीयताम् ।

९ उभौ–तह । [ तथा ] ( निष्क्रान्तौ । )

उन्मत्तकः–ही ही चन्दं गिळदि व्वाहू । मुञ्च मुञ्च चन्दं । यदि ण मुञ्चेसि, मुहं दे पाडिअ मुञ्चावइस्सं । एसे एसे दुट्ठअस्से परिब्भट्टे

१२ आअच्छदि । एसे एसे चउप्पहवीहिआअं । जाव णं आलुहिअ वळिं भक्खिस्सं । एसे एसे दाळअभट्टा ! मं ताळेह । मा खु मा खु मं ताळेह । किं भणाशि–अम्हाणं किं पि णच्चेहि त्ति । दक्खह

१५ दक्खह दाळअभट्टा ! एसे दाळअभट्टा ! पुणो वि मं ताळेह इट्ठिअहि । मा खु मा खु ताळेह । तेण हि अहं पि तुम्हे ताळेमि ।

[ ही ही चन्द्रं गिरति राहुः । मुञ्च मुञ्च चन्द्रम् । यदि न मुञ्चसि, मुखं

१८ ते पाटयित्वा मोचयिष्यामि । एष एष दुष्टाश्वः परिभ्रष्ट आगच्छति । एष एष चतुष्पथवीथिकायाम् । यावदेनमारुह्य बलिं भक्षयिष्यामि । एते एते दारकभर्तारः ! मा ताडयथ । मा खलु मा खलु मां ताडयत ।

२१ किं भणथ–अस्माकं किमपि नृत्येति । पश्यत पश्यत दारकभर्तारः ! । एते दारकभर्तारः ! पुनरपि मा ताडयथ यष्टिभिः । मा खलु मा खलु ताडयत । तेन अहमपि युष्मान् ताडयामि । ]

( निष्क्रान्तः । )

तृतीयोऽङ्कः ।

---

## अथ चतुर्थोऽङ्कः ।

( ततः प्रविशति भटः । )

३ भटः–को दाणी अहं भट्टिदारिआए वासवदत्ताए दइए कीळिदुकामाए भद्दवदीपरिचारअं गत्तसेवअं ण पेक्खामि । भाव पुप्फदन्तअ ! गत्तसेवअं ण पेक्खामि । किं भणासि– एसो गत्तसेवओ कण्डिक्कसु-

६ ण्डिगिणीए गेहं पविसिअ सुरं पिबदि त्ति । गच्छदु भावो । (परिक्रम्य)

[ क इदानीमेषोऽत्र राजमार्गे गात्रसेवक ! गात्रसेवक ! इति मा शब्दापयति । पानागारान्निष्क्रान्तो दृष्टोऽस्मि मम श्वशुरेण सुरुष्टेन ।
६ अमृतमल्लकेन घृतमरिचलवणसंपिष्टो मांसखण्डो मुखे प्रक्षितश्च । सुरा रञ्जयति पीता यदि । श्वश्रूर्नेनु दण्डोद्यता भवति ।

घन्याः सुराभिर्मत्ता धन्याः सुराभिरनुलिप्ताः ।

धन्याः सुराभिः स्नाता धन्याः सुराभिः संज्ञापिताः ॥ १ ॥

अधन्या आत्मनः पुत्रदाराणां दृष्टं पिष्टं शृण्वन्तो ये मृता नराः सुसमृद्धाः सुरातटाकं न योजयन्ति । ततो जाने यमलोके वा नरकोऽ
३ स्ति नास्ति च । ]

भटः– ( उपसृत्य ) भो गत्तसेवअ ! को कालो तुमं अण्णेसामि । भट्टिदारिआए वासवदत्ताए उदए किलिदुकामाए भद्दवदी ण
६ दिस्सदि । तुमं दाव मत्तो एत्थ आहिण्डसि ।

[ भो गात्रसेवक ! कः कालस्त्वामन्विष्यामि । भर्तृदारिकाया वासवदत्ताया उदके क्रीडितुकामाया भद्रवती न दृश्यते । त्वं तावन्मत्तोऽत्राहिण्डसे । ]

९ गात्रसेवकः–जुज्जइ । सा अ णं मत्ता, सो पुरुसो वि मत्तो, अहं वि मत्तो, तुमं वि मत्तो, सव्वं मत्तसमं होइ ।

[ युज्यते । सा च ननु मत्ता, स पुरुषोऽपि मत्तोऽहमपि मत्तः, त्वमपि
१२ मत्तः, सर्वं मत्तसमं भवति । ]

भटः–सव्वं दाव चिट्ठदु । राअउले भद्दपीठिअं णणिक्कमिअ कुदो अअं आहिण्डादि त्ति ।

१५ [ सर्वं तावत् तिष्ठतु । राजकुले भद्रपीठिकां ननिष्क्रम्य कुतोऽयमाहिण्डत इति । ]

गात्रसेवकः–इदो आहिण्डामि, एत्थ पिवामि, एदेण पिवामि, मा
१८ संरम्भेण । किं करीअदु ।

१ भद्दपीठिआ ण णिक्कमदि । कुदो अअं पिबदित्ति.

[ इत आहिण्डे, अत्र पिनामि, एतेन पिनामि, मा संरम्भेण। किं क्रियताम्। ]

२१ मद.—हिज्जउ असम्बन्धप्पलावो। सिग्घं भद्दवदिं पवेसेहि।
[ भन्यतसम्बन्धप्रलापः। शीघ्रं भद्रवतीं प्रवेशय। ]

गात्रसेवकः— पविसदु पविसदु भद्दवदी। अंघो मए भद्दवदीए
२४ अङ्कुसं आढत्तं। [ प्रविशतु प्रविशतु भद्रवती। अङ्घो मया भद्रवत्या अङ्कुशमाहितम्। ]

मदः—समारविणीदाए भद्दवदीए अङ्कुसेण किं कय्यं। गच्छ,
२७ सिग्घं भद्दवदिं पवेसेहि। [ समारविनीताया भद्रवत्या अङ्कुशेन किं कार्यम्। गच्छ, शीघ्रं भद्रवतीं प्रवेशय। ]

गात्रसेवकः-पविसदु पविसदु भद्दवदी। अंघो मए भद्दवदीए
३० खुरप्पमाला आढत्ता। [ प्रविशतु प्रविशतु भद्रवती। अङ्घो मया भद्रवत्याः क्षुरप्रमालाहिता। ]

मद.— पुप्फगन्धिआए भद्दवदीए खुरप्पमालाए किं कय्यं। सिग्घं
३३ भद्दवदिं पवेसेहि। [ पुष्पगन्ध्याया भद्रवत्याः क्षुरप्रमालया किं कार्यम्। शीघ्रं भद्रवतीं प्रवेशय। ]

गात्रसेवक-पविसदु पविसदु भद्दवदी। अंघो मए भद्दवदीए
३६ घण्टा आढत्ता। [ प्रविशतु प्रविशतु भद्रवती। अङ्घो मया भद्रवत्या घण्टाहिता। ]

मद.-उदए कीळिदुकामाए भद्दवदीए घण्टाए किं कय्यं। सिग्घं
३९ भद्दवदिं पवेसेहि। [ उदके क्रीडितुकामाया भद्रवत्या घण्टया किं कार्यम्। शीघ्रं भद्रवतीं प्रवेशय। ]

गात्रसेवक.-पविसदु पविसदु भद्दवदी। अंघो मए भद्दवदीए
४२ कंसिअं आढत्तं। [ प्रविशतु प्रविशतु भद्रवती। अङ्घो मया भद्रवत्याः कंशिका आहिता। ]

भटः–कसिएण किं कय्यं । सिग्घं भद्दवदिं पवेसेहि । [ कश्चिकेन

४५ किं कार्यम् । शीघ्रं भद्रवतीं प्रवेशय । ]

गात्रसेवकः–पविसदु पविसदु भद्दवदी । अंघो । [ प्रविशतु प्रविशतु भद्रवती । अद्यो । ]

४८ भटः–किं अंघो । [ किम् अद्यो । ]

गात्रसेवकः–अंघो मए । [ अद्यो मया । ]

भटः–किं तुए । [ किं त्वया । ]

५१ गात्रसेवकः–अंघो भद्द । [ अद्यो भद्र । ]

भटः–किं भद्दत्ति । [ किं भद्रेति । ]

गात्रसेवकः–अंघो भद्दवदी । [ अद्यो भद्रवती । ]

५४ भटः–किं भद्दवदी । [ किं भद्रवती । ]

गात्रसेवकः–भद्दवदी पि आढत्ता । [ भद्रवत्यप्याहिता । ]

भटः–ण तुवं एत्थ अवरज्झो । कण्डिल्लसुण्डिकिणी खु अवरज्झा,

५७ जा राअवाहणं गण्हिअ सुरं देदि । [ न त्वमत्रापराद्धः कण्टिल-शौण्डकी खल्वपराद्धा, या राजवाहनं गृहीत्वा सुरां ददाति । ]

गात्रसेवकः–अंघो मए उत्तं–मा मूलविंदि विणासेहि त्ति ।

६० [ अद्यो मयोक्तम्–मा मूलवृंदि विनाशयेति । ]

भटः–हं सद्दो विअ । [ हं शब्द इव । ]

गात्रसेवकः–अंघो जाणामि जाणामि, कण्डिल्लसुण्डिकिणीए गेहं

६३ भिन्दिअ भद्दवदी पल्लाअदि । [ अद्यो जानामि जानामि, कण्टिल-शौण्डिक्या गेहं भित्वा भद्रवती पलायते । ]

भटः– किं भणासि ( आकाशे ) एसो भट्टा वच्छराओ वासवदत्तं

६६ गण्हिअ णिग्गदो त्ति । [ किं भणसि–एष भर्ता वत्सराजो वासव-दत्तां गृहीत्वा निर्गत इति । ]

गात्रसेवकः– ( सहर्षम् )अविघ्नमस्तु स्वामिनः ।

६९ भट.—पिब पिब । अज्ज वि तुमं मत्तो आहिण्डेहि । [ पिब पिब । अद्यापि त्वं मत्त आहिण्डस्व । ]

गात्रसेवकः—आः को मत्तः, कस्य वा मदः, वयं खल्वार्ययौगन्ध-
७२ रायणेन स्वेषु स्वेषु स्थानेषु स्थापिताश्चारपुरुषाः । यावदहमपि सुहृज्जनस्य संज्ञां करोमि । एते ते सुहृदो निरोधमुक्ता इव कृष्णसर्पा इतस्ततो निर्धावन्ति । भो भोः सुहृदः ! शृण्वन्तु शृण्वन्तु
७५ भवन्तः—

नवं शरावं सलिलैः सुपूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम् ।
तत्तस्य मा भून्नरकं स गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत् ॥२॥

क्व नु खल्वार्ययौगन्धरायणः । ( विलोक्य ) अये अयमत्रभवान् आर्ययौगन्धरायणः । य एषः,

निशितविमलखड्गः संहृतोन्मत्तवेषः
कनकरचितचर्मण्यर्पितवामहस्तः ।
विरचितबहुचीरः पाण्डराबद्धपट्टः
सतडिदिव पयोदः किञ्चिदुद्गीर्णचन्द्रः ॥ ३ ॥

अहो[1] महत् प्रवृत्तं युद्धम् ।

हत्वा गजान् सवाजिनः सहयांश्च योधा-
नक्षौहिणीमतिविगाह्य बलान्मुहूर्तम् ।
नागेन्द्रदन्तमुसलाहतभग्नबाहु-
र्भ्रष्टायुधोऽपि ननिवृत्तपदोऽभियातः ॥ ४ ॥

हा धिग्, ग्रहणमुपगतः खल्वार्ययौगन्धरायणः । यावदहमप्यार्ययौगन्धरायणस्य प्रत्यन्तरीभविष्यामि । ( निष्क्रान्तः । )

---

१ अहो प्रतिभयमिदं युद्धम् । अहो महत्प्रतिभयं प्रवृत्तमिदं युद्धम्.

३ भटः– किं णु खु एदं । पाआरतोरणवज्जं सव्वं कोसम्बी खु इदं । होदु, इमं वुत्तन्तं अमच्चस्स णिवेदेमि । [ किन्नु खल्वेतत् । प्राकारतोरणवर्जं सर्वं कौशाम्बी खल्विदम् । भवत्विमं वृत्तान्तममात्याय
६ निवेदयामि । ]

( निष्क्रान्तः । )

प्रवेशकः ।

९ ( ततः प्रविशतः साधारणौ । )

उभौ– उस्सरह उस्सरह अय्या ! उस्सरह । [ उत्सरतोत्सरतार्याः ! उत्सरत । ]

१२ प्रथमः–अंहो कण्ठस्स दीअमाणस्स ण उच्चं विरमदि । [ अहो कण्ठस्य दीर्यमाणस्य नोच्चं विरमति । ]

द्वितीयः–अंहो भट्टिदारिआए वासवदत्ताए अवणअणविब्भमदाए
१५ विरुयन्तस्स मे वअणं कोच्चि ण सुणादि । अंहो किं भणह–किंणिमित्तं उस्सारणा वत्तदि त्ति । गहीदो अय्यजोअन्धराअणो । किं भणह—कहं गहीद त्ति । सुणन्तु अय्या । अय्यजोअन्धराअणेण
१८ असिदुदीएण अक्खोहिणीए अग्गवेगो मुहुत्तअं धारिदो । विजयसुन्दरस्स हत्थिणो दन्तन्तचोदिदो असी विअण्णो । असिदोसेण गहीदो, ण पुरुसदोसेण । [ अहो भर्तृदारिकाया वासवदत्ताया
२१ अपनयनविभ्रमतया विरुवतो मे वचनं कश्चिन्न शृणोति । अहो किं भणथ–किंनिमित्तमुत्सारणा वर्तत इति । गृहीत आर्ययौगन्धरायणः । किं भणथ–कथं गृहीत इति । शृण्वन्त्वार्याः । आर्ययौगन्धरायणेनासिद्वितीयेन
२४ नाक्षौहिण्या अग्रवेगो मुहूर्तं धारितः । विजयसुन्दरस्य हस्तिनो दन्तान्तचोदितोऽसिर्विपन्नः । असिदोषेण गृहीतो, न पुरुषदोषेण । ]

प्रथमः–अंहो अप्पमत्ता होह तुम्हे । पाआरतोरणवज्जं सव्वं
२७ कोसम्बी खु इअं । [ अहो अप्रमत्ता भवत यूयम् । प्राकारतोरणवर्जं सर्वं कौशाम्बी खल्वियम् । ]

उभौ-ओदरदु ओदुरदु अय्यो ओदरदु ।

१० [ अवतरत्ववतरत्वार्योऽवतरतु । ]

( ततः प्रविशति यौगन्धरायणः बद्धबाहुः कञ्चुकिनानीयमानः । )

यौगन्धरायणः-अयमहमवतरामि ।

रिपुगतमपनीय वत्सराजं ग्रहणमुपेत्य रणे स्वशास्त्रदोषात् ।
अयमहमपनीतभर्तृदुःखो जितमिति राजकुले सुखं विशामि ॥५॥

भोः ! सुखं खलु निष्फलश्रमाणां कान्तारप्रवेशः, रमणीयतरः खलु प्राप्तमनोरथानां विनिपातः, अपश्चात्तापकरः खलु सञ्चितधर्माणां

१ मृत्युः । मया हि,

वैरं भयं परिभवं च समं विहाय
　　कृत्वा नयैश्च विनयैश्च शरैश्च कर्म ।
शत्रोः श्रियं च सुहृदामयशश्च हित्वा
　　प्राप्तो जयश्च नृपतिश्च महांश्च शब्दः ॥ ६ ॥

उभौ-उस्सरह उस्सरह अय्या । उस्सरह । [ उत्सरतोत्सरतार्याः ! उत्सरत । ]

यौगन्धरायणः-मद्दर्शनाभिलाषी जनो न कश्चिदुत्सारयितव्यः ।

पश्यन्तु मां नरपतेः पुरुषाः ससत्त्वा
　　राजानुरागनियमेन विपद्यमानम् ।
ये प्रार्थयन्ति च मनोभिरमात्यशब्दं
　　तेषां स्थिरीभवतु नश्यतु वाभिलाषः ॥ ७ ॥

उभौ-उस्सरह उस्सरह । किं तुम्हेहि ण दिट्ठपुरुवो अय्यजोअन्धराअणो ! [ उत्सरतोत्सरत । किं युष्माभिर्न दृष्टपूर्व आर्ययोग-
२ न्धरायणः ! ]

यौगन्धरायण.-दृष्टः पूर्वं, न त्वेवम् । मम हि,

उन्मत्तच्छन्नवेषस्य रथ्यासु परिधावतः ।
अवगीतमिदं रूपं कर्म सम्प्रति दृश्यते ॥ ८ ॥

( प्रविश्य )

भटः—अय्य ! पिअं दे णिवेदेमि । गहीदो किल वच्छराओ ।
१ [ आर्य ! प्रियं ते निवेदयामि । गृहीतः किल वत्सराजः । ]

यौगन्धरायणः— नैतदस्ति ।

चिरमरिनगरे निरोधमुक्तः स किल वनान्युपलभ्य भद्रवत्या ।
ग्रहणमुपगमिष्यति प्रयातो निमिषितमात्रगतेषु योजनेषु ॥९॥

भद्र ! कथं गृहीत इति श्रुतम् ।

भटः—अणुसारिअ णळागिरिणा गहीदो किळ । [ अनुसार्य नल-
२ गिरिणा गृहीतः किल । ]

यौगन्धरायणः—अस्ति वाहनसामर्थ्यम् । असमायुक्तस्तु सः ।

गजस्याधोरणायुक्तो जवो भवति शिक्षया ।
विमुक्तं वत्सराजेन क एनं वाहयिष्यति ॥ १० ॥

भटः—अय्य ! अमच्चो आह—आउहागारे चिट्ठदु किळ अय्यो ।
पुरुसगुत्तो अअं देसो त्ति । [ आर्य ! अमात्य आह—आयुधागारे
३ तिष्ठतु किलार्यः । पुरुषगुप्तोयं देश इति । ]

यौगन्धरायणः—अहो हास्यमभिधानम् ।

अग्निं बद्ध्वा वत्सराजाभिधानं यस्मिन् काले सर्वतो रक्षितव्यम्
तस्मिन् काले सुप्तमासीदमात्यैर्नीते रत्ने भाजने को निरोधः ॥११॥

( परिक्रम्य )

भटः—इदं आहुदागारं । पविसदु अय्यो । [ इदमायुधागारम् ।
२ प्रविशत्वार्यः । ]

( प्रविश्य ) भटः—अमच्चो आह—अवणीअदु बन्धणं त्ति ।
[ अमात्य आह—अपनीयतां बन्धनमिति । ]

६ भरतरोहकः– ( उपविश्य ) भोः ! यौगन्धरायण इत्यशरीराण्यक्षराणि श्रूयन्ते । दिष्ट्या भवान् दृश्यते ।

यौगन्धरायणः–दिष्ट्या भवान् दृश्यत इति । पश्यतु भवान् माम्,

एवं रुधिरदिग्धाङ्गं वैरं नियममाश्रितम् ।
गुरोरवजितं हत्वा शान्तं द्रौणिमिव स्थितम् ॥ १५ ॥

भरतरोहकः–अहो छलेनागतगआरम्भस्यात्मसंभावना ।

यौगन्धरायणः–किं छलेनेति । तत् पुनरिदानीं युक्तम् ।

या सा मल्लिकसालवृक्षरचिता नागाश्रिता वञ्चना
बद्धः सेवितवान् हि नो नरपतिर्वाहूपधानां क्षितिम् ।
राज्ञो वारणनिग्रहे परिचयाद् वीणाश्रिता वञ्चना
पूर्वं प्रस्तुतमेव यामि भवता नैवापराधो मम ॥ १६ ॥

भरतरोहकः–भो यौगन्धरायण ! यदग्निसाक्षिकं महासेनस्य दुहितरं शिष्यां प्रतिगृह्य अदत्तापनयनं कृतं, युक्तेयं चौरतस्करप्रवृत्तिः ।

१ यौगन्धरायणः–मा मा भवानेवम् । विवाहः खल्वेष स्वामिनः ।

भारतानां कुले जातो वत्सानामूर्जितः पतिः ।
अकृत्या दारनिर्देशमुपदेशं करिष्यति ॥ १७ ॥

भरतरोहकः–अद्यापि महासेनेन प्रयुक्तसत्कारो वत्सराजः । यदिदानीं किं नावेक्षते ।

३ यौगन्धरायणः–मा मा भवानेवम् ।

यदस्य चाज्ञां कुरुते नलागिरिः स शिक्षितानां वचनेषु तिष्ठति ।
ततो विमुक्तः स्वशरीररक्षणे यशः प्रदातुं सुहृदां च जीवितम् ॥१८॥

भरतरोहकः–यद्येवं, नलागिरिग्रहणार्थं विमुक्तश्चेद्, न पुनर्यद्दस्ते स्थामी ।

---

१. नैवात्र दोषो मम.

३ यौगन्धरायणः–नेति पश्यत्युपक्रोशभयात्।

भरतरोहकः–अपरोक्षराज्यव्यवहारो भवानिति ब्रवीति। समराव-
जितेषु शत्रुषु किमाह शास्त्रम्।

६ यौगन्धरायणः–वधः।

भरतरोहक–वधार्हो वत्सराजश्चेत् किमस्माभिः स सत्कृतः।

यौगन्धरायण–एतदवेक्ष्य खलु यदस्य शरीरं नापहृतम्।

९ भरतरोहकः–एतदपि सम्भाव्यं मन्यते स्वामी।

यौगन्धरायणः–कः संशयः।

हस्तमाप्तो हि यो राजा रक्षितस्तेन साधुना।
न ह्यनारुह्य नागेन्द्रं वैजयन्ती निपात्यते॥ १९॥

भरतरोहक–भवतु भवतु। महासेनस्य प्रतिकूलं कृत्वा कौशाम्बीं
प्रति का कृता ते बुद्धिः।

१ यौगन्धरायण–अहो हास्यमभिधानम्।

भवतां चाग्रतो यातः शेषकार्येषु का कथा।
समूलं वृक्षमुत्पाट्य शाखाछेत्तुं कुतः श्रमः॥ २०॥

(प्रविश्य)

काञ्चुकीयः– (कर्णे) एवमिव।

१ भरतरोहकः–प्रकाशमुच्यताम्।

काञ्चुकीयः–

कारणैर्बहुभिर्युक्तैः कामं नापकृतं त्वया।
गुणेषु न तु मे द्वेषो शृङ्गारः प्रतिगृह्यताम्॥ २१॥ इति।

यौगन्धरायणः–हा धिक्।

गृह्य न निर्दहन्ति मया प्रदीपितास्तथैव तावद्धृदयानि मन्त्रिणाम्।
इयं तु पूजा मम दण्डधारिण. कृतापराधस्य हि सत्कृतिर्वध.॥२२॥

(नेपथ्ये हाहाकारः क्रियते।)

भरतरोहकः—अये,

> को नु खल्वेष सहसा प्रासादाग्रात् विनिःसृतः ।
> श्येनपक्षाभिमृष्टानां कुररीणामिव ध्वनिः ॥ २३ ॥

भोः ! ज्ञायतां शब्दः ।

काञ्चुकीयः—यदाज्ञापयत्यार्यः । ( निष्क्रम्य प्रविश्य ) एषा तत्रभव-
३ त्यङ्गारवती शोकाभिभूतहृदया प्रासादाच्छरीरं विमोक्तुकामा
महासेनेनाभिहिता यथा—क्षत्रधर्मेणोद्दिष्टस्ते दुहितुर्विवाहः ।
किमिदानीं हर्षकाले सन्तप्यसे । तच्चित्रफलकस्ययोर्वत्सराज-
६ वासवदत्तयोर्विवाहोऽनुष्ठीयताम् इति । तत्र हि,

> स्त्रीजनेनाद्य सहसा प्रहर्षव्याकुलक्रमा ।
> क्रियते मङ्गलाकीर्णा सबाष्पा कौतुकक्रिया ॥ २४ ॥

यौगन्धरायणः— एवं सम्बन्धं मन्यते महासेनः । तेन ह्यानीयतां
भृङ्गारः ।

३ काञ्चुकीयः—गृह्यताम् । ( उपनयति । )

भरतरोहकः—भो यौगन्धरायण ! किं ते भूयः प्रियमुपहरति
महासेनः ।

६ यौगन्धरायणः—यदि मे महासेनः प्रसन्नः, किमतः परमिच्छामि ।

( भरतवाक्यम् )

> भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु ।
> इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ॥ २५ ॥

( निष्क्रान्ताः सर्वे । )

चतुर्थोऽङ्कः ।

प्रतिज्ञानाटिकावसिता ।

---

# श्लोकानुक्रमणी ।



# अविमारकस्य कथावस्तु ।

चण्डभार्गवस्य नामात्यन्तकोपनस्य महर्षेः संवत्सरावधिशापात् सपुत्रदारः श्वपाकत्वमवाप्तः सौवीरराजः कुन्तिभोजनगरे प्रच्छन्नं निवसति स्म । तस्यात्मजो विष्णुसेनोऽविरूपधारिणोऽसुरस्य मारणादविमारक इति लब्धापरनामा कदाचित् स्वमातुलस्य कुन्तिभोजस्य दुहितरं कुरङ्गीमुद्यानगतामञ्जनगिरिसंज्ञस्य मदान्धगजस्य संरम्भात् परित्रातवान् । ततःप्रभृति प्रवृद्धानुरागयोरनयोः कुरङ्ग्यविमारकयोर्घटनाय कुरङ्ग्या धात्री कदाचिद् रात्रावेनं सुगूढं कुरङ्ग्या अन्तःपुरं प्रावेशयत् । तत्र चासावविच्छिन्नसुरतसंभोगेन तया सह कालं यापयामास । एवं संवत्सरेऽतिक्रान्ते विदितवृत्तान्तेन कुन्तिभोजेन रुद्धे कन्यापुरे, अविघ्नेन निर्गत्य कतिपयदिवसप्रोषितो स मदनेनान्तर्दह्यमानो जीवितं धारयितुमसमर्थो दवाग्नौ पतितोऽप्यात्मानमविकलशरीरमभिवीक्ष्य मरुत्प्रपातार्थं कञ्चिच्छैलमारुरोह । अत्रान्तरे तस्मिन्नेव शैलशिखरे कोऽपि विद्याधरः प्रियतमया सह विश्रमितुमवतीर्णः प्रणिधानतो विदितवद्वृत्तान्तो दयमानोऽस्मा अङ्गुलीयकमदात् यद् दक्षिणाङ्गुल्या धृतं धर्तारं तत्स्पृष्ट तत्स्पृष्टस्पृष्टं चान्तर्हितान करोत् । वामाङ्गुल्या धृतं तु पुनः प्रकृतिस्थान् । ततस्तद् दक्षिणाङ्गुल्या धारयन् स्ववयस्येन विदूषकेण सह कन्यापुर पुनः प्रविश्य तया सार्धं स्वैरं चिरं रममाण आसीत् । कुन्तिभोजस्तु जामातृत्वेन चिरमभिलषितस्याविमारकस्य प्रवृत्तिमलभमानो भागिनेयान्तरं काशिराजपुत्रं जयवर्माणं दारिकां कुरङ्गीं दातुमैच्छत् । अथ कालेन सौवीरराजं स्वनगर एव प्रच्छन्नं प्रतिवसन्तं ज्ञात्वा गूढपुरुषैरन्विष्योपलभ्य च यावत् तद्वृत्तान्तं तस्मादेव शृणोति तावत् तत्रागतो देवर्षिर्नारदः । तेन च कथितं यथा कुमारोऽविमारकः कुन्तिभोजस्य सोदर्याया काशिराजमहिष्या सुदर्शनायामुत्पन्नः । तया च स्वभगिन्यै सौवीरराजमहिष्यै सुचेतनायै मृतपुत्रायै प्रसूतिकाल एव समर्पितः । सोऽयमविमारकोऽधुना विद्याधरेण प्रीत्यान्तर्धानकार्यमात्रमङ्गुलीयकं दत्तं धारयन् कन्यापुरं प्रविश्य कुरङ्ग्या यथेष्टमभिरममाणः सुखमास्त इति । अथ अविमारकः कन्यापुरात् निर्गत्य देवर्षिं नारदमभिवाद्य मातुलेन स्वपितृभ्यां च [illegible]भैरभिनन्दितश्च ।

## पात्राणि ।

पुरुषाः—

राजा—कुरङ्ग्याः पिता कुन्तिभोजः ।

कौञ्जायनः— <br> भूतिकः— } कुन्तिभोजस्यामात्यौ ।

भटः—कुन्तिभोजस्य प्रतिहारो जयसेननामा ।

अविमारकः—सौवीरराजसूनुः ।

विदूषकः—अविमारकस्य वयस्यः संतुष्टनामा ।

सौवीरराजः—अविमारकस्य पिता ।

नारदः—देवर्षिः ।

विद्याधरः—अविमारकस्याङ्गुलीयकप्रदाता ।

स्त्रियः—

देवी—कुन्तिभोजस्य महिषी ।

कुरङ्गी—कुन्तिभोजदुहिता ।

सुदर्शना—अविमारकस्य जननी काशिराजमहिषी ।

प्रतिहारी—कुन्तिभोजस्य द्वारपालिका ।

चेटी—कुरङ्ग्याः किङ्करी चन्द्रिकाख्या ।

धात्री—कुरङ्ग्या उपमाता जयदा नाम ।

नलिनिका— <br> मागधिका— <br> विलासिनी— } कुरङ्ग्याः परिजनः ।

वसुमित्रा— <br> हरिणिका— } देव्याश्चेट्यौ ।

सौदामिनी—विद्याधरस्य प्रियतमा ।

श्रीगणेशाय नमः ।

महाकविश्रीभासप्रणीतम्

# अविमारकम् ।

( नान्द्यन्ते ततः प्रविशति सूत्रधारः । )

सूत्रधारः—

उदिक्षप्तां सानुकम्पं सलिलनिधिजलादेकदंष्ट्राग्रदण्डा-
माक्रान्तामाजिमध्ये निहतदितिसुतामेकपादावधूताम् ।
सम्भुक्तां प्रीतिपूर्वं स्वभुजवशगतामेकचक्राभिगुप्तां
श्रीमान् नारायणस्ते प्रदिशतु वसुधामुच्छ्रितैकातपत्राम् ॥ १ ॥

( नेपथ्याभिमुखमवलोक्य ) आर्ये ! इतस्तावत् ।

( प्रविश्य )

३ नटी— अय्य ! इअम्हि । [ आर्य ! इयमस्मि । ]

सूत्रधारः— आर्ये ! तव वदनजनितकौतूहलेन स्मितेन निवेदित इवा-
स्वर्गतो भावः । ननु किञ्चिद् वक्तुकामासि ।

६ नटी— को एत्थ विम्हओ अय्यो भावण्णो त्ति । [ कोऽत्र विस्मय
आर्यो भावज्ञ इति । ]

सूत्रधारः— तेन हि स्वैरमभिधीयताम् ।

९ नटी— इच्छेमि अय्येण सह उय्याणं गन्तुं । अत्थि मे तहिं इत्थि-
आकरणीअं णिअमकय्यं । [ इच्छाम्यार्येण सहोद्यानं गन्तुम् । अस्ति
मे तत्र स्त्रीकरणीयं नियमकार्यम् । ]

१२ ( नेपथ्ये )

भूतिक ! त्वमप्युद्यानं गच्छ कुरङ्गीरक्षणार्थम् । मद्भावस्थो
ह्यञ्जनगिरिः ।

१५ सूत्रधारः– आर्ये ! ननु भवत्या श्रुतम्–उद्यानं गता राजपुत्रीति । तस्मात् सम्प्रति सर्वतः परिगुप्तानि भवन्त्युद्यानानि । प्रतिनिवृत्तायां राजसुतायां स्वैरं गमिष्यावः ।

१८ नटी– जं अय्यो आणवेदि । [ यदार्य आज्ञापयति । ]

( निष्क्रान्तौ )

स्थापना ।

( ततः प्रविशति राजा सपरिवारः )

राजा–

इष्टा मखा द्विजवराश्च मयि प्रसन्नाः
प्रह्लापिता भयरसं समदा नरेन्द्राः ।
एवंविधस्य च न मेऽस्ति मनःप्रहर्षः
कन्यापितुर्हि सततं बहु चिन्तनीयम् ॥ २ ॥

केतुमति ! गच्छ देवीमानय ।

प्रतिहारी– जं भट्टा आणवेदि । [ यद् भर्ताज्ञापयति । ] ( निष्क्रान्ता )

३	( ततः प्रविशति सपरिवारा देवी )

देवी– जेदु महाराओ । [ जयतु महाराजः । ]

राजा– देवि ! नित्यप्रसन्नमपि ते मुखमद्यातिप्रसन्नमिव । किङ्कृतो

६ ऽयं प्रहर्षः ।

देवी– णं महाराएण कहिदं–कुरङ्गीणिमित्तं दूदो आअदत्ति । ता अइरेण जामादुअं पेक्खामि त्ति । [ ननु महाराजेन कथितं–कुरङ्गी-

९ निमित्तं दूत आगत इति । तदचिरेण जामातरं प्रेक्ष इति । ]

राजा–तादृशमप्यस्ति । न तु तावत् क्रियते निश्चयः । इहोपविश ।

देवी–जं महाराओ आणवेदि । [ यद् महाराज आज्ञापयति । ]

१२	( उपविशति । )

राजा–देवि ! विवाहा नाम बहुशः परीक्ष्य कर्तव्या भवन्ति । कुतः,

जामातृसम्पत्तिमचिन्तयित्वा
पित्रा तु दत्ता स्वमनोभिलाषात् ।
कुलद्वयं हन्ति मदेन नारी
कूलद्वयं क्षुब्धजला नदीव ॥ ३ ॥

अये शब्द इव । बहुभिः कारणैर्भवितव्यम् । अयं हि,

बहुत्वाद् दूरसंस्थोऽपि समीप इव वर्तते ।
सत्सु हेतुसहस्रेषु कुरङ्गयां शङ्कते मतिः ॥ ४ ॥

देवी–हं उय्याणं गआ मे दुहिआ । [ हम् उद्यानं गता मे दुहिता । ]

राजा–कोऽत्र ।

३ ( प्रविश्य )

भटः–जयतु महाराजः । एष आर्यकौञ्जायनो निवेदयितुमागतः ।

राजा–शीघ्रं प्रवेश्यताम् ।

६ भटः–यदाज्ञापयति महाराजः । ( निष्क्रान्तः । )

( ततः प्रविशति कौञ्जायनः । )

कौञ्जायनः–( सनिर्वेदम् ) भोः ! कष्टममात्यत्वं नाम । कुतः,

प्रसिद्धौ कार्याणां प्रवदति जनः पार्थिवबलं
विपत्तौ निस्पष्टं सचिवमतिदोषं जनयति ।
अमात्या इत्युक्ताः श्रुतिसुखमुदारं नृपतिभिः
सुसूक्ष्मं दण्ड्यन्ते मतिबलनिदग्धाः कुपुरुषाः ॥ ५ ॥

जयसेन ! कस्मिन् प्रदेशे वर्तते स्वामी । किं ब्रवीषि–उपस्थान-गृह इति । अतस्त्वशङ्कनीयेयं भूमिः । ( परिक्रम्य ससम्भ्रमम् )

९ प्रसीदतु स्वामी ।

राजा–अलमलं सम्भ्रमेण । स्वैरमुपविश्य कथ्यतां वृत्तान्तः ।

कौञ्जायनः–शृणोतु स्वामी । ननु स्वामिनाहमुक्तः–स्वामिदारिकया
६ सह गच्छोद्यानम् इति ।

राजा–एवमुक्तम् । पुनः किम् ।

कौञ्जायनः–ततो गत्वोद्यानं यथासुखमाक्रीड्य निवर्तमानायां राज-
९ सुतायां दासीदासहस्तिवकथितश्रवणबृंहितमदस्रवन्मदजलार्द्रदुर्दि-
नाननो निहतपतितसादिपुरुषः क्षितिरजोवगुण्ठिताव्यक्तभीम-
मूर्तिर्मूर्तिमानिव पवनो दृष्टादृष्टलघुप्रचारः स्वामिसचिवानां वक्तव्यं
१२ जनयितुकाम इवैकपुरुषविशेषं प्रकाशयितुमिच्छन्निव मदान्धस्तं
देशमभ्युपगतो हस्ती ।

राजा–तिष्ठतु विस्तरः । ननु कुशलिनी कुरङ्गी ।

१५ कौञ्जायनः–कथमकुशलिनी भवति विद्यमानेषु स्वामिभाग्येषु ।

राजा–दिष्ट्या । यथेष्टमिदानीं ब्रूहि ।

कौञ्जायनः–ततः प्रद्रुतेषु प्राकृतजनेषु हाहाकारमात्रप्रतीकारासु
१८ स्त्रीषु समाश्रितनिहतेषु सुपुरुषेषु उद्यानगतानां सर्वोपकरणानां परी-
क्षणाय मुहूर्तव्याक्षिप्ते मयि च नीतिगुप्ते सहसैव स्वामिदारिकाया
यानमेव प्राप्तः स हस्ती ।

२१ देवी–हं इदो वरं किण्णुखु भविस्सदि । [ हम् इतः परं किन्नुखलु
भविष्यति । ]

राजा–अथ केन सनाथीकृता कुरङ्गी ।

२४ कौञ्जायनः–अथ कश्चिद् दर्शनी— ( इत्यर्धोक्ते तिष्ठति )

राजा–यथेष्टमिदानीं ब्रूहि । निष्परिहारा व्यापदः ।

कौञ्जायनः–अथ कश्चिद् दर्शनीयोऽप्यविस्मितस्तरुणोऽप्यनहङ्कारः
२७ शूरोऽपि दाक्षिण्यवान् सुकुमारोऽपि बलवान् स्वामिदारिकायां
हस्तिनाभिभूयमानायां तत्कालदुर्लभमभयं प्रदाय निर्विशङ्कः समा-
सादितवांस्तं द्विपवरम् ।

